श्वत्थः सोमसवनो यस्मिन्नपराजिता पूर्ब्रह्मणो यस्मिंश्च प्रभुविमितं हिरण्मयं वेश्म यश्चानेकधा मन्त्रार्थवादादिप्रदेशेषु प्रपञ्च्यते ते तं प्राप्य न चन्द्रलोकादिवं भुक्तभोगा आवर्तन्ते । कुतः । "तयोर्ध्वमायन्नमृतत्वमेति" [छा० ८ । ६ । ६ । कठ० ६ । १६ ] "तेषां न पुनरावृत्तिः" [ बृ० ६ । २ । १५ ] "एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते" [ छा० ४ । १५ । ५ ] "ब्रह्मलोकमभिसंपद्यन्ते" [ छा० ८ । १५ । १ ] "न च पुनरावर्तते" [ छा० ८ । १५ । १ । वासुदेवोप० ४ ] इत्यादिशब्देभ्यः । अन्तवत्त्वेऽपि त्वैश्वर्यस्य यथाऽनावृत्तिस्तथा वर्णितम् "कार्यात्यये तदध्यक्षेण सहातः परम्" [ ब्र० सू० ४ । ३ । १४ ] इत्यत्र । सम्यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिः । तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिरिति । अनावृत्तिः शब्दादनावृत्तिः

---

चनः । कर्मज्ञानशून्यानां दुष्प्रापत्वमपराजितत्वम् । ब्रह्मणो हिरण्यगर्भस्येति यावत् । प्रभुशब्दोऽपि हिरण्यगर्भमेवाधिकरोति । उक्तविशेषणवति ब्रह्मलोके मानमाह । यश्चेति । चन्द्रलोकादिवेति वैधर्म्योदाहरणम् । प्रतिज्ञामेवं व्याख्यायं मोक्षहेतुमाकाङ्क्षापूर्वकं व्याख्याति । कुत इत्यादिना । ननु दर्शितानामनावृत्तिश्रुतीनामर्थवादत्वाद्विरोधेऽप्रामाण्यमिति नानुमानापबाधने सामर्थ्यमिमामिहेति च विशेषणात्कल्पान्तरे भवत्यावृत्तिरिति तत्राऽऽह । अन्तवत्त्वेऽपीति । ये तावदूर्ध्वरेतसः स्वाश्रमधर्ममात्रनिष्ठा ब्रह्मचर्येण ब्रह्मलोकमधिरूढास्तेषामन्तरेण विद्यां बन्धध्वंसासिद्धेरस्त्येवाऽऽवृत्तिः । ये तु सगुणोपासकास्तेषामैश्वर्यस्य कल्पमात्रस्थायित्वेऽपि क्रममुक्तिविवक्षयाऽनावृत्तिरविरुद्धेत्यर्थः । सगुणब्रह्मविदामेवानावृत्तिरत्र प्रतिपाद्यते न निर्गुणब्रह्मविदां तत्र को हेतुरित्याशङ्क्य तेषामावृत्तिशङ्काभावादित्याह । सम्यगिति । सगुणब्रह्मविदामपि ब्रह्मलोकगतानां तत्रोत्पन्नसम्यग्दर्शनप्रसादादेव मुक्तिरिति स्थिते सम्यग्दर्शिनामनावृत्तिः सुतरां सिध्यतीति कैमुतिकन्यायमाह । तदाश्रयणेनेति । उपासकानामीश्वरायत्तमैश्वर्यं न निरतिशयमित्यधिकरणार्थमुपसंहर्तुमितीत्युक्तम् । सूत्राभ्यासस्य प्रयोजनमाह । अनावृत्तिः शब्दादिति । यत्राध्यायपरिसमाप्तिस्तत्र पदस्यैवाभ्यासो दृष्टः प्रकृते सूत्रस्यैवाभ्यासाच्चतुर्लक्षणस्य वेदान्तमीमांसाशास्त्रस्य समन्वयाविरोधसाधनफ-

---

१ क. ख. 'ता पुरी ब्रह्म' । २ क. ग. 'ते तं ते प्रा' । ३ ख. ट. 'वद्युक्त' । ग. 'वाद्युक्त' । ४ ग. ट. 'द्यते" " न । ५ ज. ट. स । ६ ट. इतिश । ७ ज. 'णपरायणा' । ८ ज. ट 'ब्दादि' । ९ क. 'ष्प्राप्यत्व' । १० क.ख.ठ.ड. 'य हे' । ११ क.ख. 'दवि' । १२ ठ. 'विरोधेऽप्रा' । १३ ठ.ड. 'लोकं ग' ।

शब्दादिति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति ॥ २२ ॥ (७)

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

लानां साकल्येनोक्तत्वादुक्तव्यानवशेषात्परिसमापनमुचितमिति भावः ॥ २२ ॥ (७)

व्याख्याऽसंख्यातवर्केक्रकचचयरयत्रस्तदुस्तर्कशङ्का
शङ्काव्याजप्रकारप्रसरणसमवावस्तुतत्त्वं श्रयन्ती ॥
शुद्धानन्दाङ्घ्रियुग्मस्मृतिभरनिभृतप्रौढगाढोक्तिरूढाऽऽ-
नन्दज्ञानप्रणीता जगति मुदमियं सद्धियां संविधत्ताम् ॥ १ ॥
सन्त्येव बहुलानीह व्याख्यानानि महाधियाम् ॥
व्याख्या तथाऽपि सौख्येन व्याख्यानाय मया कृता ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृते श्रीमच्छारीरकमीमांसाभाष्यविभागे न्यायनिर्णये चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

॥ समाप्तमिदं ब्रह्ममीमांसाशास्त्रं सटीकशांकरभाष्ययुतम् ॥

॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥




१ क. दर्शयति ।

# श्रीमद्द्वैपायनप्रणीतब्रह्मसूत्राणां वर्णानुक्रमपत्रकम् ।

## आ.

## इ.



## ई.

## द.

## पः

## श.

स